## (G.) सञ्ज्ञकसङ्ग्रहस्यान्ते पातसाहिनामावलिः ।

(१) सं० १२६३ वर्षे पातसाहि साहबदीनेन गज्जणपुरात्समागत्य पृथ्वीराजं लाहउरमून्धउरयोरन्तराले निहत्य ढिल्ली गृहीता । वर्ष ३ राज्यं कृतम् ।

(२) ततः सं० १२६६ वर्षे मार्गमासे सुरत्राणसमसदीनो दाउदपुरात् ढिल्ल्यां समागतः। वर्ष २६ राज्यं कृतम्।

(३) ततः संवत् १२९२ वर्षे श्रावणशुदि २ द्वितीयायां कटकादागत्य कूटं कृत्वा पूर्वसुरत्राणं हत्वा पातसाहि पेरोजः समजनि । मास ६ राज्यं कृतम् । पश्चादाखेटके गतो यमुनातटे कयलोषरीग्रामे मारितः ।

(४) ततस्तत्पुत्री दउलती। दिनपञ्चकं यावद्राज्यं कृतम्। पश्चात्सा मुख्यैर्लम्पटत्वेन मलिका नाम्नी व्यापादिता।

(५) ततः परं वर्ष ३ मास ६ शून्यं जातम् । तदा मलिककूबडीपुत्र मोजदीन मलिको ढिल्ल्यां समभूत् । सं० १२९६ वर्षे राज्यं वर्षद्वयं यावत्कृतम् । स नानामलिकभेदेन मृतः ।

(६) ततः पातसाहि पेरोजपुत्रः अलावदीनो नानामलिकेन राज्ये स्थापितः । वर्ष ३ राज्यं कृतम् ।

(७) ततः सं० १३०१ वर्षे आसाढमासे पूर्वस्यां दिशि बहडाइचनगरान्मलिक समसदीनः समागतः । तेन ढिल्ल्यां वर्ष २१ राज्यं कृतम् ।

(८) ततः सं० १३२२ वर्षे फाल्गुनमासे त्रयोदश्यां शुक्रवारे नसरदीनसाहिना राज्यं कृतम् । वर्षं एकं यावत् ।

(९) ततः सं० १३२३ वर्षे चैत्रवदि २ द्वितीयायां ग्यासदीनो राजा जातः । वर्ष २० राज्यं कृतम् ।

(१०) सं० १३४३ वर्षे चैत्रमासे कोकामलिकभेदेन मोजदीन पातसाहिर्जातः। वर्ष ३ मास ३ राज्यं जातम्।

(११) सं० १३४६ वर्षे फाल्गुनशुदि ६ षष्ठ्यां खलचीवंशीय मलिकजलालदीनेन राज्यं कृतम्। वर्ष ६ मास ९ । स यमुनातीरे षंभराग्रामसमीपे मलिक अलावदीनेन मारितः ।

(१२) ततः जलालदीनपुत्रो रुक्मदीनो राज्यधरो बभूव । मास ३ राज्यं कृतम् ।

(१३) सं० १३५२ वर्षे सुरत्राणः अलावदीनो जातः । वर्ष [२१] राज्यं कृतम् ।

(१४) सं० १३७३ वर्षे माघशुदि ११ दिने पातसाहि अलावदीनपुत्रः सहावदीनः पातसाहिर्जातः । मास २॥० राज्यं चकार ।

(१५) ततः सं० १३७३ वैशाखशुदि ३ दिने सुरत्राण अलावदीनपुत्रः कदुबदीनः पातसाहिर्जातः । वर्ष ५ राज्यं कृतम् ।

(१६) ततः सं० १३७८ वर्षे ज्येष्ठशुदि २ दिने कदुबदीन [पुत्रः] षोसरुषानु पातसाहि नसरदीनो राज्यधरः । मास ४ राज्यं कृतम् ।

(१७) सं० १३७८ वर्षे भाद्रपद शुदि २ द्वितीयायां देपालपुरस्थानात् तुगलकगा.........तो ढिल्ल्यां नसरदीनं हत्वा ग्यासदीन पातसाहिर्जातः । वर्ष ४ राज्यं कृतम् । लषणावती नगरात्समागतः सुरत्राणः पुत्रेण महमूंदेन तुगलाबाद.........मध्ये कूटयन्त्रप्रयोगेण मारितः ।

(१८) ततः सं० १३८० वर्षे आषाढशुदि २ द्वितीयायां महमूंदपातसाहिर्जातः । वर्ष २७ राज्यं कृतम् । बालराजा जात...... ।

(१९) ततः संवत् १४०७ वर्षे श्रीपातसाहि पेरोजनामाजनि ।

### (P.) सञ्ज्ञकसङ्ग्रहस्य अन्तिमोल्लेखः ।

सिरिवत्थुपालनंदणमंतीसरजयतसिंहभणणत्थं ।
नागिंदगच्छमंडणउदयप्पहसूरिसीसेणं ॥
जिणभद्देण य विक्कमकालाउ नवइ अहियबारसए ।
5 नाणा कहाणपहाणा एस पबंधावली रईआ ॥

---

१४२९ श्रीजिराप० श्रीसावदेवसू० स्वं चरित्रं न वेडितं पश्चात् ढिल्यां ग० समुपार्ज्य पश्चात् संवत् १४३० भाद्र० मासे श्रीगिरनारे समभाव० त्वा परलो० जगाम ।

---

संवत् १५२८ वर्षे मार्गसिर १४ सोमे श्रीकोरण्टगच्छे श्रीसावदेवसूरीणां शिष्येण मुनिगुणवर्द्धनेन लिपीकृतः । मु० उदयराजयोग्यम् । श्रीः ।

---

# पुरातनप्रबन्धसङ्ग्रहे

## पद्यानुक्रमणिका ।

# पुरातनप्रबन्धसङ्ग्रहान्तर्गतविशेषनाम्नां सूचिः ।

## अकाराद्यक्षरानुक्रमेण

## ह

# प्रबन्धचिन्तामणिग्रन्थान्तर्गतविशेषनाम्नां सूचिः ।

## ॥ अकाराद्यक्षरानुक्रमेण ॥